किं तु तस्यैवायुक्तत्वप्रदर्शनार्थः । तस्मिन्नुपन्यस्यमानएव हि तदयुक्तत्वं स्फुटं प्रतीयते । तथा हि । संशयवाक्ये न तावत्प्राणव्यावृत्तत्ववागाद्येकादशानुगतमिन्द्रियत्वं सिद्धान्ते निर्वक्तव्यतया उपक्रान्तम् । अपि तु देहाधिष्ठानत्वे सति रूपाद्यालोचनकरणत्वमिन्द्रियत्वमिति कर्मेन्द्रियेभ्यो ऽपि व्यावृत्तं निरुक्तं निष्प्रयोजनं वा ऽधिकरणम् । यदि पूर्वपक्षरीत्या प्राणानुगतमिन्द्रियत्वं निरुच्यते यदि वा सिद्धान्तरीत्या तद्व्यावृत्तम् उभयथापि हि नास्ति प्रयोजनम् । न हि वैशेषिकशास्त्रवत्साधर्म्यवैधर्म्यविचारार्था अस्य शास्त्रस्य प्रवृत्तिः । न च प्राणस्येन्द्रियत्वे इन्द्रियेभ्य एव त्वम्पदार्थो विवेक्तव्यः अनिन्द्रियत्वे तु प्राणादपीति प्रयोजनभेदः शङ्कनीयः । न हीन्द्रियेभ्यो ऽहं भिन्न इति त्वम्पदार्थो विवेक्तव्यः किं त्वन्धः काणो मूको बधिरः कुणिः खञ्ज इत्यादिरूपतत्तदिन्द्रियविशेषाभेदभ्रमनिरासायान्धादहं भिन्न इत्यादिप्रकारेण । अतः प्राणद्वादशानामिन्द्रियत्वे ऽपि प्राणादपि त्वम्पदार्थस्य विवेकः कार्य एव । भाष्यकारीये तु पूर्वपक्षे प्राणाद्विवेकव्यतिरेकेणेन्द्रियेभ्यो विवेको न कार्यः । वृत्तिमतः प्राणात्तत्त्वान्तरस्य तद्वृत्तिभ्यस्तत्त्वान्तरत्वस्य कैमुतिकन्यायेन सिद्धेः । पाणिनिस्मृतिमवलम्ब्य पूर्वपक्षो ऽपि तुच्छः । तामेवावलम्ब्येन्द्रदृष्टेषु विषयेष्विन्द्रजुष्टेषु भोग्येष्विन्द्रसृष्टेषु घटादिष्विन्द्रदत्तेषु ग्रामादिषु चेन्द्रियत्वपूर्वपक्षप्रसङ्गात् । इन्द्रियशब्दरूढिमवलम्ब्यातिप्रसङ्गपरिहारे तत एव प्राणव्यावृत्तेरपि लाभात् । सूत्रयोजनाक्लेशभिया तुच्छाधिकरणार्थपरिग्रहस्तु वदान्यगृहान्तःप्रवेशक्लेशभिया तद्द्वारदृष्टपरिग्रहतुल्यः । न च भाष्यकारमते सूत्रयोजनाक्लेशोपि । तथा हि । प्रतिज्ञाध्याहारस्तावदसिद्धः । ते वागादयः श्रेष्ठादन्यत्र श्रेष्ठादन्ये तत्त्वान्तराणीति सौत्रपदैरेव प्रतिज्ञालाभात् । भेदश्रुतेरित्यनेन पौनरुक्त्यमप्यसिद्धम् । तद्व्यपदेशादित्यस्य उत्पत्तिव्यपदेशादित्येतदर्थकत्वेन भेदव्यपदेशादित्येतदर्थकत्वाभावादुत्पत्तिव्यपदेशः प्राणे ऽप्यस्तीति व्यभिचारवारणाय श्रेष्ठादन्यत्रेति हेतावपि विशेषणम् । इन्द्रियाणीति मनः सर्वेन्द्रियाणि चेत्येतच्छ्रुतिगतशब्दानुकरणम् । तत्र इतिशब्दमात्रमध्याहर्तव्यम् । तथा च श्रेष्ठव्यतिरेकेण श्रेष्ठोत्पत्तिव्यतिरेकेणेन्द्रियाणि जायन्तइति शब्देनोत्पत्तिव्यपदेशादिति हेत्वर्थो भवतीति श्रेष्ठव्यतिरेकोक्त्या श्रेष्ठोत्पत्तिव्यतिरेक इन्द्रियाणामुत्पत्तिव्यपदेशोक्तिसामर्थ्याल्लभ्यते । यथा सिंहतुल्यपराक्रमो राजेत्यत्र राज्ञः पराक्रमोक्तिसा-

मर्थात्सिंहोत्तया सिंहपराक्रमो लभ्यते एवम्भूत एव हेत्वर्थो भाष्ये व्यपदेशभेदादित्यनेन व्यपदेशविशेषादित्यर्थकेन विवक्षितः । अत एव कोऽयं व्यपदेशभेद इति प्रश्नपूर्वकं हेत्वर्थस्यैव विवरणमुत्तरत्र क्रियते न तु हेत्वर्थस्य प्रसाधनम् । हेत्वर्थस्वरूपस्यैव प्रश्नदर्शनात् । अतः श्रेष्ठादन्यत्रेत्येतद्धेतावप्यन्वेति इन्द्रियाणीत्येतद्धेतावेवान्वेतीति । इदं सर्वं भाष्याभिमतमेव । तच्छब्दस्यानन्तरोक्तपरामर्शकत्वमप्युपपद्यत एव । न वियदश्रुते*रित्यारभ्योत्पत्तेः प्रकृतत्वात् तथा प्राणाः† श्रेष्ठश्चे‡ति सूत्रयोः प्राणेन्द्रियविषयतयापि तस्याः प्रकृतत्वात् । एतस्माज्जायतइति विवक्षितमूलश्रुत्युपात्ततया ऽपि तत्परामर्शोपपत्तेश्च । तथा प्राणा इति सूत्रे हि विषयवाक्यसंनिहितोपमानस्यापि तच्छब्देन परामर्शो ऽङ्गीकृतः । इहेन्द्रियाणीति सैाश्रशब्देनैवोपात्ते मूलश्रुतिवाक्ये तत्संनिहितपरामर्शः सुतरामुपपद्यते । एतेन प्राण इन्द्रियाणीति संज्ञाभेदमात्रं न तत्वान्तरत्वसाधकमिति शङ्का ऽपि निरस्ता । प्राणोत्पत्तिव्यतिरेकेणोत्पत्तिकथनस्य हेत्वर्थत्वात् । नन्वेवमपि श्रेष्ठादन्यत्रेत्यस्य साध्यान्वितस्य हेतावव्यावृत्त्या ऽन्वयः हेताविविशब्दाध्याहारश्चेति क्लेशो ऽस्तीति चेद् न । परमते व्यावृत्त्या तदन्वयावश्यम्भावात् । टीकायां हि तेनेन्द्रियशब्देन तेषां वागादीनां व्यपदेशादिति हेतुरुक्तः स तु वागादीनामेव श्रेष्ठं वर्जयित्वेन्द्रियशब्देन व्यपदेशादित्यवधारणापेक्षः । अन्यथेन्द्रियव्यपदेशस्य प्राणव्यावृत्तत्वाऽप्रतीतौ तत्प्रवृत्तिनिमित्तस्येन्द्रियत्वस्य प्राणाद्व्यावृत्त्यसिद्धेः । अत एव चाचार्यैर्दर्पणे सावधारणो हेतुरुपन्यस्तः । तेनेन्द्रियशब्दे तेषामेव वृद्धव्यवहारे व्यपदेशादिति । एतेन हेताविविशब्दाध्याहारक्लेशो ऽपि निरस्तः । परमत एव भेदश्रुते§रित्यधिकरणान्तरसूत्रे वागादीनीन्द्रियाणि श्रेष्ठात्तत्वान्तराणीति प्रतिज्ञाध्याहारार्थबहुक्लेशसद्भावादिन्द्रियाणि श्रेष्ठादन्यत्रेत्यस्मात्सूत्रादनुषङ्गतः प्रतिज्ञा लभ्यतइति चेत्तर्हि श्रेष्ठादन्यत्रेत्यस्य ते वागादयः श्रेष्ठादन्यत्रेन्द्रियाणीति पूर्वाधिकरणसाध्यान्वितस्य पुनस्तद्धेतावन्वितस्य भेदश्रुतेरिति सूत्रे ऽप्यन्वय इति परमत एवातिक्लेशः । अस्मन्मते त्विन्द्रियाणीत्यस्य विनैवेतिशब्दाध्याहारं तइन्द्रियाणीति पक्ष-

---

* व्या॰ सू॰ अ॰ २ पा ३ सू॰ १ । † व्या॰ सू॰ अ॰ २ पा॰ ४ सू॰ १
‡ व्या॰ सू॰ अ॰ २ पा॰ ४ सू॰ ८ । § व्या॰ सू॰ अ॰ २ पा॰ ४ सू ८ ।

निर्देशार्थत्वेनाप्यस्त्युपपत्तिः । तथा पञ्चनिर्देशस्य मनः सर्वेन्द्रियाणि चेतीन्द्रियोत्पत्तिप्रतिपादकवाक्यस्मरणार्थत्वाद् न वैयर्थ्यं तत एव तत्स्मारणसिद्धेः न हेतावपि तदन्वयापेक्षा इतिशब्दाध्याहारेण हेतौ तदन्वयस्यापि अनुकृतेस्तस्य चेति सूत्रे* तस्य चेत्यंशस्यैव विवक्षितश्रुतिवाक्यसूचनप्रयोजनात् । तस्मात्स्वरूपव्याक्रियैव निराक्रियेत्यभिप्रेत्य टीकायां वृत्तिकारमतोपन्यास इत्येव युक्तम्† ॥

संज्ञामूर्त्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥ ३३९

विषयप्रदर्शकं भाष्यमुदाहृत्य व्याचष्टइति । भाष्यं गृहीत्वा तदुदाहृतं विषयवाक्यं व्याचष्टइत्यर्थः । अरुणादाविति । यद्यप्येतथाधिकरणे एकहायनीद्रव्यवदारुण्यस्यापि साक्षादेव क्रयान्वयः शाब्दो व्युत्पादितः तथापि श्रुतक्रयसाधनत्वनिर्वाहार्थमारुण्यस्यैकहायनीद्रव्यावच्छेदकत्वेनार्थः पार्ष्णिकान्वयो ऽभ्युपगत इति तदभिप्राया परम्परासंबन्धोक्तिः सप्रदशारत्निर्वाजपेयस्य यूप इति तु साक्षात्प्रधानसंबन्धाऽसंभवेन शाब्दपरम्परासंबन्धाश्रयणे उदाहरणम् ।

यत्र च कर्ता कर्त्रन्तरं प्रति करणमिति । जीवस्तावत् तृतीयाश्रुत्या करणत्वेन प्रतीयते चेतनस्य चेतनान्तरं कर्तारं प्रति करणतयोपकरणत्वं च प्रयोज्यकर्तृत्वेनैव भवति नान्यथेति भावः । न च पाचयत्योदनं देवदत्तेनेतिवदिह तृतीयायाः कर्त्रर्थत्वं शङ्कनीयम् । तत्र ण्यन्तधातूक्ताख्याताभिहितकर्तृकप्रयोजकव्यापारव्यतिरेकेण तत्प्रकृतिभूतपचत्यर्थाऽ‡नभिहितकर्तृकप्रयोज्यव्यापारवदिहाख्याताभिहितकर्तृकाध्यारोपितप्रयोजकव्यापाररूपव्यापारव्यतिरेकेणा§नभिहितकर्तृकस्य कस्य चित्प्रयोज्यव्यापारस्याभावात् । तस्मादुत्तमपुरुषनिर्दिष्टाया देवतायाः कर्तृत्वेनान्वये सति तृतीयान्तनिर्दिष्टस्य जीवस्य तस्यां करणत्वेनैवान्वयो वक्तव्य इति भावः ।

प्रधानान्वययोग्यतायामिति । यथेष्टकाः पक्त्वा भुङ्क्ते इत्यत्रे- ३४० ।
ष्टकानां प्रधानक्रियान्वयाऽयोग्यत्वादुपसर्जनक्रियान्वयः तथेहापीत्यर्थः ।
प्रवेशक्रियान्वयपक्षे ऽपि न कर्तरि तृतीया । न च यथेष्टकाः पक्त्वा भुङ्क्ते

---

* व्या० सू० अ० १ पा० ३ सू० ३२ । † अत्राष्टमम् इन्द्रियाधिकरणं पूर्णम् ।
‡ पचत्यर्थेति पु० पा० । § रूपव्यापारक्रियाव्यतिरेकेणेति २ पु० पा० ।

इत्यत्रेष्टकानां कर्मत्वस्य क्त्वाप्रत्ययेनानभिधानादिष्टका इति कर्मणि द्वितीया तथेह कर्तरि तृतीया शङ्कनीया । युक्ता तत्र क्त्वाप्रत्ययस्य कर्मानभिधायित्वाद् द्वितीया समानकर्तृकयोः पूर्वकालइति स्मरणादिह क्त्वाप्रत्ययेन कर्तुरभिधानमस्तीति न कर्तरि तृतीया युक्ता । न च क्रियाद्वयकर्तुरैक्यमेव क्त्वाप्रत्ययार्थः न तु तद्गतकर्तृशक्तिरप्यतस्तदनभिधानात्तत्र तृतीया भवितुमर्हतीति शङ्कनीयम् । तथा सतीष्टकाः पक्त्वा ऽहं भोक्ष्यइत्यत्रापि मयेति तृतीयाप्रसङ्गात् । न च भोजनक्रियाकर्तुराख्यातेनाभिधानात्तृतीया न भवतीति वाच्यम् । न ह्यनभिहितसूत्रस्याभिहितकारकशक्त्याश्रये तृतीया न भवतीत्यर्थः किं त्वनभिहितकारकशक्त्याश्रये भवतीति । भाष्यवार्तिकयोः पर्युदासपक्षाश्रयणात् । अत एव प्रासादे आस्तइत्यत्र प्रसीदन्त्यस्मिन् जना इत्यर्थे विहितेन घञा प्रसादनक्रियाधिकरणत्वस्याभिहितत्वे ऽपि आसिक्रियाधिकरणत्वस्यानभिधानात् सप्तमी एवमिहापि भुजिक्रियाकर्तृत्वस्याभिधाने ऽपि पाकक्रियाकर्तृत्वानभिधानात् तृतीया स्यात्तस्मात्तत्र क्त्वाप्रत्ययेन कर्तृशक्त्यभिधानमाश्रित्यैव तृतीयाभाव उपपादनीयः तथेहापि कर्तरि तृतीया न भवतीति करणार्थैव सेति युक्तम् । तदयमर्थः सेयं देवता जीवरूपेणानुप्रविश्य तद्भोगार्थे नामरूपे व्याकरवाणीति संकल्पितवतीति* ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजि-
द्याजिश्रीरङ्गराजाध्वरिवरसूनोरप्पयदीक्षितस्य कृतौ वेदान्त-
कल्पतरुपरिमले द्वितीयाध्यायस्य चतुर्थः पादः ॥

**समाप्तो ऽविरोधाख्यो द्वितीयो ऽध्यायः ॥**



* नवमं संज्ञामूर्तिक्लृप्त्यधिकरणं पूर्णम् ।